# राष्ट्रगौरवम्

(संस्कृतगीतकाव्यम्)

रचयिता

**डॉ. उपेन्द्रपाण्डेयः**

व्याकरण-साहित्याचार्यः, एम.ए., पी-एच.डी.

काशीहिन्दूविश्वविद्यालयीयसंस्कृतविद्यासङ्काये

साहित्यविभागे उपाचार्यः

उत्कर्ष-प्रकाशनम्, वाराणसी-१०

○ राष्ट्रगौरवम्

○ उत्कर्ष-प्रकाशन
बी. ३४/३७ पी-१, गायत्रीनगर
सुकुलपुरा, वाराणसी - २२१०१०
दूरभाष : - ०५४२ - २३६८३२१



○ प्रकाशनवर्षम्
मातृप्रथमपुण्यतिथिः, मार्गशीर्षशुक्लप्रदोषः
विक्रमसंवत्- २०६१, दिसम्बर, २००४

○ प्रतिरूपाणि ५००

○ मूल्यम् १०० रूप्यकाणि

○ मुद्रक :
काबरा आफसेट
रवीन्द्रपुरी, वाराणसी

# समर्पणम्

यद्वात्सल्यसमाश्रयेण हि मया सर्वस्वमासादितं
नव्यं जीवनमत्र वेशधिषणाप्रौढित्वमावर्द्धितम्।
तस्यै चन्द्रकलीति मातृकृपया काव्यं नवं निर्मितं
पूर्णायै कविता समर्प्यत इयं तत्प्रीतये सानतम्।।

# शुभाशंसा

डॉ. उपेन्द्रपाण्डेयेन विरचितं राष्ट्रगौरवं ललितगीतकाव्यं मया आमूलचूडं श्रुतम्। तत्र हि भारताख्यस्य राष्ट्रस्य गौरवं साङ्गोपाङ्गं वर्णितमस्ति। प्रथमं संस्कृतवाङ्मयस्य महत्त्वं सविस्तरमुपपादितं भाति। तदनु राष्ट्रैतस्य समुत्थानाय ये किल राष्ट्रभक्ताः स्वात्मानमपि समर्पितवन्तः, तेषां शौर्यं महत्त्वञ्च सेतिहासमिह साधु प्रस्तुतं वर्तते। येन सर्वेषामेव भारतीयजनानां मनसि राष्ट्रस्योत्कर्षार्थं नवा भावना समुदेष्यतीति मन्ये।

काव्यस्यास्य भाषा सरला सुगमा च विद्यते। अतः सहृदयसज्जनानां स्वाभाविकी प्रवृत्तिरस्य पठने श्रवणे तदनुसरणे च भविष्यतीति मे विश्वासः।

अधिकाशि, भद्रवनी
श्रीभैरवाष्टमी, वि.सं. २०६१
४.१२.२००४

रामाधीनचतुर्वेदी
काशीहिन्दूविश्वविद्यालये
पूर्वव्याकरणविभागाध्यक्षः

# राष्ट्रगौरव-प्रशस्तिः

राष्ट्रस्यास्य समुन्नतगौरवमत्राऽस्ति कवितायाम्।
संवर्णितं सुकविभिः श्रीमदुपेन्द्राख्यपाण्डेयैः।।१।।

राष्ट्रमिदं संसेवितुमथ वर्णयितुं यथाशक्ति।
सत्कवयोऽप्यद्यावध्यहमहमिकया प्रवर्तन्ते।।२।।

भारतराष्ट्रमिदं तद्दिव्यं रूपं समासाद्य।
सत्कविनिर्मितविभवे नव्यं भव्यं पुरातनं जातम्।।३।।

राष्ट्रस्य काऽपि सेवा तं सन्तोषं निवेदयति।
आसाद्य यस्य धारां सर्वा सञ्जायते तृप्तिः।।४।।

धन्यं दिनं प्रजातं यस्मिन् काचिन्नवा कविता।
राष्ट्रसमर्पणशीलैः कविवर्यैर्वा समारचिता।।५।।

अद्य तु सोऽयं समयः श्रीमदुपेन्द्रेण सत्कविना।
संपूर्यते पुरस्तात् काव्यमिदं सम्मुखे कृत्वा।।६।।

सद्गुरुवर्यसुसेवासंवर्धितसाधुसत्प्रज्ञः।
श्रीमदुपेन्द्रवरेण्यः स्वादितविभवो विभाव्यते विज्ञैः।।७।।

सङ्ग्रहरूपं तदिदं सत्काव्यं राष्ट्रगौरवं नाम।
सर्वत्र लोकसेवाऽनुरञ्जकं रूपमाधेयात्।।८।।

मार्गशीर्षपूर्णिमा
विक्रमसंवत् - २०६१
२६.१२.२००४

शिवदत्तशर्मा चतुर्वेदः
काशीहिन्दूविश्वविद्यालये
पूर्वसाहित्यविभागाध्यक्षः

# प्ररोचना

प्रोत्फुल्लोत्पलशुभ्रकोमलविभां पूर्णेन्दुमुग्धानां
हंसाधिष्ठितविग्रहामपि सदाऽहंसारसत्त्वात्मिकाम्।
शब्दब्रह्मपरां सदर्थमहितां नादात्मिकां मञ्जुलां
वीणापाणिमहो महोज्ज्वलकलां वाग्देवतां तां भजे।।

शब्दार्थविग्रहां शश्वद्रसभावस्वरूपिणीम्।
नादब्रह्ममयीमन्तःसारां स्तौमि सरस्वतीम्।।

प्राचेतससमारम्भां कालिदासार्यमध्यमाम्।
अस्मदादिपरिस्पन्दां वन्दे कविपरम्पराम्।।

काव्यं नाम कवयितुः स्वसंवित्परिस्पन्दसुन्दरं शब्दार्थसार्थसम्पृक्तमपूर्वं किमपि सरस्वत्यास्तत्त्वमानन्दापरपर्यायम्। **रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति** श्रुत्यन्तमन्त्रवर्णात्तदेव 'रस' इति पदेनापि व्यपदिश्यते विपश्चिद्भिरिति नापरोक्षं प्रेक्षावताम्। विश्वस्मिन्निदम्प्रथमतया संस्कृतभारत्यामेव 'कविः' 'काव्य'मिति च सम्प्रत्ययः प्रतितिष्ठति सनिदर्शनं समग्रतयेत्यपि निर्विचिकित्सं बुद्धिपथमारोहति समेषां पक्षपातव्रातविरहितानां समीक्षाव्रतिनाम्।

तत्र च भगवत्प्राचेतसादादिकवेरारभ्येदानीन्तनकविवलयपर्यन्तं नैरन्तर्यं व्यश्नुवाना सुतमां प्रवहतीति संस्कृतकाव्यकल्लोलिनीति शुभंयुना विद्वत्कविना सुगृहीतनामधेयेन डॉ. श्रीमदुपेन्द्रपाण्डेयमहाभागेन सन्दृब्धं **'राष्ट्रगौरव'**मिति नामधेयं प्रत्यग्रं काव्यमवलोक्य सगौरवं व्याहर्तुं शाशक्यते। शिवताण्डवादिस्तोत्रकाव्यप्रथितं स्रग्विणीति वृत्तबन्धबन्धुरं राष्ट्रभक्तिधुरन्धरं काव्यसुममिदमास्वाद्य सम्प्रत्यमन्दानन्दमनुबोभवीतितरां नश्चेतश्चञ्चरीकः। प्रतिपदं भारतराष्ट्रमहत्त्वमहिता नूतनोत्प्रेक्षासहिता विवरणमधुरा दोषकण्टकविधुरा पाण्डेयमहोदयस्य

काव्यपद्धतिर्विद्वन्मनांसि समनुरञ्जयन्ती नातिप्रथीयसि काव्येऽपि सविशेषमुद्योतते। राष्ट्रस्यास्य जीवातुभूतं संस्कृतमिति तथ्यं रम्यतया बहुभिः पद्यैः सञ्जग्राह श्रीपाण्डेयवर्य्यस्तेषु कानिचन यथा-

**संस्कृते ज्ञानराशिः समुदीप्यते**
**सद्विभक्तञ्च विज्ञानमभ्यर्ह्यते।**
**सर्वभूतात्मरूपं समाराजते**
**संस्कृते राष्ट्रियं वैभवं राक्ष्यते।।** रा.गौ.२

**संस्कृते भव्यभावः सदा काशते**
**संस्कृते सद्विचारः समाख्यायते।**
**संस्कृते विश्वबन्धुत्वमुद्घोष्यते**
**संस्कृते वाङ्मयं साम्प्रतं रक्ष्यते।।** रा.गौ.३

**स्याच्च सत्यं शिवं सुन्दरं सौख्यदं**
**संस्कृते भारतं भारते संस्कृतम्।**
**सर्वलोका यतन्तां सदा राजतां**
**राष्ट्रभूत्याश्रितं संस्कृतं भारतम्।।** रा.गौ.१२१

कवेरस्ति काचिदनवद्येयं कामना यत्सर्वमपि भारतीयं वस्तुजातं संस्कृतं सदेव विलसतु, संस्कृता वागेवास्माकं राष्ट्रभाषात्वेन सद्यस्तरां सदातराञ्च विभ्राजमाना समुल्लसतु-

**संस्कृते राष्ट्रसम्पत्तिरेवस्थिता**
**संस्कृते राष्ट्रनीतिः समुल्लासिता।**
**संस्कृतेऽमूल्यरत्नं स्वदेशोद्भवं**
**भ्राजतां राष्ट्रभाषा सदा संस्कृता।।** रा.गौ.५

**संस्कृता यत्र वाणी मनः संस्कृतं**
**संस्कृतं दर्शनं जीवनं संस्कृतम्।**
**संस्कृता राजनीतिर्बलं संस्कृतं**
**भारतं नः पुनर्द्योततां संस्कृतम्।।** रा.गौ.६

राष्ट्रगौरवकृदयं कवयिता स्वस्मिन्काव्येऽस्मिन् क्वचिद् वेदान्तराद्धान्तमनुवदति क्वचिद् गीतोपनिषदमवतारयति क्वचिच्च नीतिसारमग्रेसारयति पारम्परिकरीत्या, कुहचनाधुनिकं समाजवादं प्रगतिवादमपि भारतीयदृशा संस्कृत्य स्वच्छन्दोभिः स्वच्छन्दतयाऽऽविष्करोति; प्रादेशमात्रमत्र निदर्श्यन्ते काश्चन पद्यपङ्क्तयो, यथा-

ब्रह्मणश्चात्मजाः सन्ति सर्वे जना
नीडमेकं महद् विश्वमुद्घोष्यताम्। रा.गौ.५४

एष आत्मा सदा सुस्थिरः स्वान्तगः, रा.गौ.५७

वेदराशिः प्रभुश्वाससन्निर्गतो
ज्ञानपुञ्जात्मको वन्दनीयो हृदा। रा.गौ.७९

जातिवर्गादिभेदः समुत्सार्यताम्। रा.गौ.५४

सद्गुरुग्रन्थपैगम्बरो गीयते। रा.गौ.३४

यल्लसन्मस्तकं मन्दिरैर्मस्जिदै-
श्चर्चसच्छ्रीगुरुद्वारकैराश्रमैः। रा.गौ.४३

यौतुकादानसम्प्राप्तये ये नरा
दग्धुमिच्छन्ति सर्वस्वमात्मप्रियम्। रा.गौ.११०

मन्दिरे मस्जिदे वा गुरुद्वारके
यत्र सर्वत्र चैकं महः पूज्यते। रा.गौ.९८

पारसीमुस्लिमेसाइबौद्धादयो
हिन्दवश्चाऽत्र सङ्गत्य शान्त्या मुदा।
व्याहरन्तः शिवाल्लाह-बुद्धं पदं
संस्कृते भारते सञ्चरेयुः सदा।। रा.गौ.९९

**नैकराज्येषु चातङ्कवादोऽधुना**
**वर्द्धतेऽहर्निशं दानवैः पावके।।** रा.गौ.९०

पर्यावरणसंरक्षणार्थमपि जागरूकतामाबिभर्ति कविः श्रीपाण्डेयस्तद्यथेदं पद्यम्-

**मारुतो रक्षतां पावको रक्ष्यतां**
**मण्डलं सर्वयत्नेन संरक्ष्यताम्।।** रा.गौ. १८

सत्काव्यस्य प्रयोजनतया कीर्त्तिः प्रीतिश्चेति द्वय्यभ्युपगताऽऽचार्यैः किन्त्वानुषङ्गिकतया कान्तासम्मित उपदेशोऽप्यनन्तरभाविभिर्व्यपदिश्यते वाग्देवतावतारप्रभृतिभिः समीक्षाधुरीणैः। अत्र राष्ट्रगौरवाभिधे काव्ये सद्यः परनिर्वृतिस्त्वन्तःसलिलावत्सर्वत्रनिगूढा प्रियावचनोद्भावितललितोपदेशसरणी च निरतिशयं चमत्कृतिमाधत्त इत्यभ्यूहितुं शक्नुमो वयं काव्यपठनादनन्तरम्।

पर्यन्ते, वयमेनमुदीयमानं पण्डितकविं स्वसाधुवादोक्तिभिः पौनःपुन्येन समभिवर्द्धयन्तः सहृदयानां नवकाव्यास्वादनप्रणयिनां पाठकानां च कल्याणकरकमलयोः सप्रमोदमिदमुपहरामो 'राष्ट्रगौरवं' नाम नूत्नं काव्यगुच्छकं, सहैव नातिद्राघीयसीं प्ररोचनाञ्चेमामत्रैव विश्रान्तिमुपनयाम इति दिक्।

मार्गशीर्षपूर्णिमा
विक्रमसंवत् - २०६१
२६.१२.२००४

**डॉ. विन्ध्येश्वरीप्रसादमिश्रो 'विनयः'**
उज्जयिनीस्थ-विक्रमविश्वविद्यालयस्य
स्नातकोत्तरसंस्कृतविभागे उपाचार्यः

# किञ्चिद् राष्ट्रियम्

मदीयं राष्ट्रमिति भावनया तदभ्युदयस्य मे मनसि प्रवृत्तिरुदिता। ततो राष्ट्रभक्तानां विमलं कार्यमनुसृत्य काव्यमिदं प्रणीतम्। अत्र ये सहजा राष्ट्रभावा हृदि प्रादुर्भूताः, त एव काव्यत्वेनात्रोपनिबद्धाः। यैर्भावैः समुत्साहिताः सर्वेऽपि देशवासिनो जना राष्ट्रस्य समुन्नत्यै तत्परा भवेयुः। अस्तु!

तत्र तावद् राष्ट्रशब्दो राजृदीप्तावित्यस्माद् धातोः "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिकसूत्रेण ष्ट्रन्-प्रत्यये कृते निष्पद्यते। तत्र राष्ट्रशब्दस्य कस्मिन्नर्थे प्रयोगो विहित इत्यालोचयामश्चेद्, अनादयोऽपौरुषेया वेदाः सर्वप्रथमम् अन्वेषणीया भवन्ति। तत्र तावद्

**युवो राष्ट्रं बृहत्[1], वरुणो राजा राष्ट्राणाम्[2], राष्ट्रं राज्यम्[3], राष्ट्रं गुपितं क्षत्रियस्य[4], अहं राष्ट्री संगमनी वसूनाम्[5], महते ज्येष्ठाय महते जानराज्याय,[6] आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्। आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्[7]।** इति मन्त्रो राष्ट्रगीतपदेन व्यवह्रियते। मन्त्रेऽस्मिन् प्रार्थितं वर्तते, यद् अस्माकं राष्ट्रे ब्रह्मवर्चस्विनो ब्राह्मणा भवेयुः, शूरा धनुर्धरा लक्ष्यभेदिनो महारथा राजन्या भवेयुः, धेनुर्दोग्ध्री, अनड्वान् वोढा, अश्वः शीघ्रगामी, योषा कुलाङ्गना वंशवृद्धिकरी पतिव्रता, रथी जयशीलः, युवानो वीराः प्रियदर्शिनः सभ्याश्च भवेयुः, समये समये पर्जन्योऽपेक्षितं वर्षतु, ओषधयः फलवत्यः पक्वा भवन्तु, अस्माकं योगक्षेमं च कल्पयतु इति। राष्ट्रं जानराज्यमपि कथ्यते, यस्यार्थो भवति 'जनानामिदं जानम्, जानं च तद् राज्यं जानराज्यमिति।' तथा हि शुक्लयजुर्वेदे प्रोक्तम्। तथा चाथर्ववेदे राष्ट्रशब्दस्याऽनेकत्र प्रयोगो दृश्यते-

१. ऋग्वेदः ७/८/४२.
२. " ७/३४/११.
३. " ७/८४/२.
४. " १०/१०९/३.
५. ऋग्वेदः १०/१२५/३.
६. शुक्लयजुर्वेदः ९/४.
७. " २२/२२.

**आत्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।**
**विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत्[1]।।**

अर्थाद् हे राजन्! त्वा = त्वां, सर्वा विश: = प्रजा:, स्वामिरूपेण वाञ्छन्तु, त्वद् राष्ट्रं = राज्यं मा अधिभ्रशत्, अत्राधिपतिरूपेण अविचलो ध्रुवस्तिष्ठ, अत्र अन्तरभू: = भुवोऽन्तरे, त्वा = त्वामाहार्षम् इत्यस्यापि प्रयोगो विद्यते, अतो ज्ञायते राष्ट्रशब्दस्यार्थो राज्यम्, पृथिव्या स भाग: यावान् राज्ञ: आधिपत्ये वर्तते, यावदिमा: प्रजाश्च निवसन्ति। अन्यत्र च-

**इहैवैधि मापच्योष्ठा पर्वत इवाविचाचलत्।**
**इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुपधारय[2]।।**

अर्थाद् हे राजन्! भवान् इन्द्र इवाऽत्र ध्रुवस्तिष्ठतु, अदो राष्ट्रं धारयत्विति। पुनरग्रे प्रार्थना वर्तते-

**ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पति:।**
**ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्[3]।।**

हे राजन्! त्वद् राष्ट्रं राजमानो वरुण: स्थिरं करोतु, बृहस्पतिरिन्द्रोऽग्निश्च स्थिरं करोतु। राष्ट्राधिपति: प्रजा अनुरञ्जयति, यतो हि परमात्मा प्रजा अन्वरज्यत, ततो राजा अजायत। तद्यथा-

**सोऽरज्यत ततो राजन्योऽजायत[4]।**
**स विशोऽनुव्यचलत्।**
**तं सभा च समितिश्च सेना च सुरा चानुव्यचलन्[5]।**

सभा त्रिधा भवति, अर्थाद् भारतीयानां नित्यं संविधानं वेद:, तस्यार्थनिर्धारिणी सभा अर्थं निर्णयति, सा संविधाननिर्णेत्री सभाऽस्ति,

१. अथर्ववेद: ६/८/१.
२. " ६/८७/२.
३. " ६/८८/२.
४. अथर्ववेद: १५/५/२.
५. " १५/९/१-२.

संविधानस्य कार्यान्वयनमपरा कारयति, तृतीया च विवादे जाते संविधानस्य तात्पर्यं निर्णयति, सेना चैतासां सभानां साहाय्यमाचरति। अयमेव राजधर्मः कथ्यते, अस्य पालनं सभा समितिः सेना च कुर्वन्तु कारयन्तु च। राजापि सभ्यान् सभासदश्च अनुरुणद्धि-

**सभ्यः सभां मे पाहि ये च सभ्याः सभासदः[1]।**

इयं वेदोक्ता प्रणाली अधुनाऽपि दृश्यते, प्रथमा विधाननिर्मात्री सभा, द्वितीया कार्यपालिका सभा, तृतीया न्यायपालिका सभा च त्रिविधा वर्तते। तिसृणां सभानां साहाय्यं च सेना करोति। अपि चान्यत्र प्रोक्तम्-

**माता पृथ्वी राष्ट्राय त्विषामूर्जां च प्रयच्छति स्म[2]।**

एषु मन्त्रेषु प्रयुक्तो राष्ट्रशब्दो भारतीयमनीषायाः प्रकर्षं दर्शयति। ऐतरेयशतपथब्राह्मणयोरध्ययेनापि सुस्पष्टं भवति यत् प्राचीन-भारतेऽत्यन्तमेव विकसितमनेकराज्यमासीत्। तत्र ऐतरेयब्राह्मणस्य राज्याभिषेकप्रकरणं भारतवर्षेऽतिप्राचीनकालादेव राष्ट्रं, राज्यं, भूभागं तत्शासनपद्धतिं च सूक्ष्मरूपेण प्रस्तौति-

**ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषाऽआन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति।**

अर्थात् राज्यम्, महाराज्यम्, साम्राज्यम्, पारमेष्ठ्यम् इत्यादीनि राज्यस्य व्यवस्थितस्वरूपाणि सन्ति। विराजकत्वाद् वैराज्यं भवति। वैराज्यस्यापि स्वस्तिकामना मन्त्रेऽस्मिन् कृता वर्तते। राज्यभेदादेव राजा, महाराजः, सम्राट्, शासकादयोऽपि भेदाः प्रकल्पिताः सन्ति। तत्र राज्ञा प्रशासितो भूभागो राष्ट्रमुच्यते। तच्च लघुभूभागरूपं राज्यम्, अतिविस्तृत-

१. अथर्ववेदः १९/५५/५.
२. " १ २/१/८.

भूभागयुक्तं साम्राज्यम्, बृहद्भूभागभूतञ्च महाराज्यमिति कथ्यते। एषां शासको राजा राजसूययज्ञं वाजपेययज्ञञ्च करोति स्म। तथा चोक्तम्-

**राजसूयेन राजा भवति, वाजपेयेन सम्राट् भवति[१]।**

तदेतेन स्पष्टं भवति यद् भारतवर्षे राष्ट्रस्य परिकल्पना अतिप्राचीनकालेऽपि पल्लविता पुष्पिता चासीत्। फ्रान्सस्य राष्ट्रवादः पाश्चात्त्यदेशेभ्यो नूतनोपलब्धिर्भविष्यति, परञ्च कौटिल्यस्यायं देशो राष्ट्रचिन्तने प्रारम्भादेवाग्रणीर्वर्तते। अत एव कौटिल्यस्तु धार्मिकजनतां, बुद्धिमतः स्वामिनः नृपतिप्रभृतींश्च राष्ट्रान्तर्गतान् मन्यते। राष्ट्रे येषां वस्तूनामनिवार्यताऽस्ति, तानि वस्तूनि निर्दिश्य कौटिल्यस्तान्यपि गौणीवृत्त्या राष्ट्रशब्दार्थतयाऽङ्गीकरोति। तानि च वस्तूनि कृषिधान्योपहारकरवाणिज्यलाभनदीतीर्थादिप्राप्तिपत्तनादिजन्यलाभसीमावर्तिपर्वतारण्यादयः सन्ति।[२] एतान् राष्ट्रवृद्धिकरान् शोभाकरान् दीप्तिकरान् पदार्थान् गणयित्वा कौटिल्य एतानपि लक्षणया राष्ट्रशब्देन व्यवहृतवान्। कामन्दकीयनीतिसारेऽप्युक्तम्-

**भूगुणैर्वर्धते राष्ट्रं तद्वृद्धिर्धनवृद्धये।**
**तस्माद् गुणवतीं भूमिं भूत्यै नृपतिरादिशेत्[३]।।**

राष्ट्रे दण्डव्यवस्थां प्रकुर्वन् मनुः प्राह- सम्यग् विविच्य दण्डप्रयोगो विधेयः, अनुचितदण्डविधानं राष्ट्रं पीडयति। अर्थाद् यो राजा स्वराष्ट्रमज्ञानवशात् पीडयति स विनश्यति। तथा चोक्तम्-

**ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम्।**
**अन्तरिक्षगतांश्चैव मुनीन् देवाँश्च पीडयेत्[४]।।**

**मोहाद् राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया।**
**सोऽचिराद् भ्रश्यते राज्याज्जीविताच्च सबान्धवः।।**

१. ऐतरेयब्राह्मण; ५/१/१/१३.
२. कौटिल्यार्थशास्त्रप्रकरणम् ९६.
३. कामन्दकीयनीतिसारः ४/४-५.
४. मनुस्मृतिः ७/२९.

**शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा।**
**तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्[1]।।**

एतावता देशवासिनां जनानां रक्षणं राष्ट्राधिपतेः कर्त्तव्यमस्ति। यस्तु तस्करानृ न नियन्त्रयति, करं च गृह्णाति, तस्य राष्ट्रं क्षुब्धं भवति। यथोक्तं मनुस्मृतौ-

**अशासन् तस्करान् यस्तु बलिं गृह्णाति पार्थिवः।**
**तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते[2]।।**

तदित्थमेषां समालोचनेन ज्ञायते यद् राष्ट्रशब्दस्यार्थाः राज्यम्, देशः, विषयः, जनपदः, सीमाबद्धभूभागः, तत्र निवासिनः प्राणिनः, राष्ट्रवासिनश्च लोके विख्याताः। एवञ्च कर्मण्यर्थे ष्ट्रन्-प्रत्ययविधानात् निष्पन्नराष्ट्रशब्दो विविधाभिः सामग्रीभिर्दीप्तं देशं बोधयति, करणेऽर्थे च ष्ट्रन्-प्रत्ययनिष्पन्नो राष्ट्रशब्दस्तं देशं बोधयति, येन देशेन राज्यं दीप्तं, राजा वा दीप्तो भवति। देशदीप्तिसम्पादनार्थं धर्मः, संस्कृतिः, जातिः, भाषाप्रभृतयोऽपेक्षिताः सन्ति। एषां संरक्षणादेव राष्ट्रं गौरवान्वितं भवति।

सर्वमेतत्समालोच्य चाधारीकृत्य 'राष्ट्रगौरवम्' नामकं भावोल्लसद् रसमयं लघुगीतकाव्यं मया विनिर्मितम्। अत्राऽस्माकं संस्कारितभारतस्य गौरव-महिमा प्रकाशश्च यथा प्रदीप्तो भवेत् पृथिवीतले, तथाविधान् विविधान् सद्भावाश्रितान् विचारान् प्रकटयितुं- संस्कृतवाङ्मयस्य महत्त्वम्, पर्यावरणसंरक्षणम्, कर्मभूभारतस्य वैशिष्ट्यम्, सत्कार्याचरणम्, देवाराधनम्, संस्कृति-संस्मरणम्, भारतजन्मप्राप्त्युद्देश्यम्, सत्समादिष्टमार्गाश्रयणम्, राष्ट्रनायककर्त्तव्यम्, गोवंशसंवर्धनम्, प्रकृतिसौन्दर्यम्, वेदाध्ययनमहत्त्वम्, राष्ट्रभूत्याख्यापनम्, राष्ट्रदशाचिन्तनम्, राष्ट्रोन्नत्युपायनिर्देशनम् इत्यादीनि विषयवस्तूनि समुपनिबद्धानि सन्ति। राष्ट्रोत्कर्षवर्धनाय राष्ट्रभक्तानां पुरावृत्तसहितं मया प्राञ्जलभाषया संस्कृतगीतकाव्यं प्रणीतम्, अस्योपयोगित्वन्तु एतस्य श्रवणानन्तरमेव रसिकमनीषिभिर्विज्ञास्यत इति।

१. मनुस्मृतिः ७/१११-११२.      २. मनुस्मृतिः ९/२५४.

अतः परं यदनुग्रहमात्रेण काव्यमिदं सम्पन्नं तं भगवन्तं साम्बसदाशिवं हनुमन्तं तथा प्रातःस्मरणीयं महामानसं मालवीयं पूज्यौ पितरौ चन्द्रकलीभागवताख्यौ च सम्प्रार्थये। अपि च ते सर्वेऽपि गुरवः प्रणम्यन्ते, येषामाशीराशिभिरहमेतत्काव्यनिर्माणे प्रवृत्तः। तत्र च महामहोपाध्यायसीतारामशास्त्रिणां चक्रवर्तिरामाधीनचतुर्वेदिनाम् आचार्यकमलेशदत्तत्रिपाठिनाम् आचार्यशिवदत्तशर्मचतुर्वेदिनाञ्च कृतज्ञतामहं सादरं बिभर्मि, तच्चरणसरोरुहेषु प्रमाणाञ्जलिञ्च समर्पयामि।

किञ्चोज्जयिनीस्थविक्रमविश्वविद्यालयस्य स्नातकोत्तरसंस्कृत-विभागस्याचार्येभ्यः श्रीमद्भागवतकथारसिकेभ्यो विद्वत्कविशिरोमणिभ्यो डॉ. विन्ध्येश्वरीप्रसादमिश्र-'विनय'-महानुभावेभ्यः कृतज्ञतामहमाबिभर्मि, यैरेतत्काव्यं साङ्गोपाङ्गं सम्यङ्निरीक्ष्य निजप्ररोचनया सम्भूषितम्।

तदनु अखिलभारतीयविद्वत्परिषदो राष्ट्रियसंयोजकं लेखनभाषण-नदीष्णं राष्ट्रवादिचिन्तकञ्च सुहृद्वरं डाक्टरकामेश्वरोपाध्यायमहोदयं प्रति सादरमाभारमहं प्रकटयामि, यैराद्योपान्तमिदं काव्यं समीक्ष्य स्वीयसत्परामर्शै-र्बहुधा समर्थितं विहिता चाऽस्य काव्यस्य मातृभाषया समीक्षा।

राष्ट्रगौरवाख्यस्य संस्कृतगीतकाव्यस्य हिन्दीभाषया भावार्थविधाने श्रीशैलेशकुमारतिवारीनाम्ना व्याकरणविभागीयशोधच्छात्रेण बहुश्रमोऽत्र विहितः, एतदर्थं तस्याऽभ्युदयमहं कामये। काव्यस्यास्याक्षरसंयोजने च श्रीनवीनकुमारश्रीवास्तवेन यादृशं कौशलं प्रदर्शितं तदर्थं मे शुभाशीषः सन्तु।

किञ्चात्मजामर्चनामात्मजावाननूदोत्कर्षौ च स्वाशीराशिभिर्विभूषयामि, यैरेतत्काव्यं श्रावं श्रावं सश्रद्धं साहाय्यमुपदर्शितम्।

एवं साहित्याचार्यधर्मपत्न्यै श्रीमतीगीतापाण्डेयमहोदयायै साधुवादान् प्रयच्छामि, ययाऽहमेतत्काव्यसम्पूर्तौ प्रेरितः।

मार्गशीर्षशुक्लप्रदोषः
विक्रमसंवत्- २०६१
२३ दिसम्बर, २००४

विदुषां वशंवदः
**उपेन्द्रपाण्डेयः**
काशीहिन्दूविश्वविद्यालयीयः

# विषयानुक्रमः

# राष्ट्रगौरवम्

(संस्कृतगीतकाव्यम्)

संस्कृते भारते सद्विभुः प्रार्थ्यते
भव्यराष्ट्रस्य भालःपुनर्भासताम्।
पातु नित्यं नवं सुन्दरं जीवनं
सन्ततिर्भारतीया चिरं वर्धताम्।।१।।

संस्कारों से परिपूत इस भारत राष्ट्र में हम सत्यस्वरूप उस व्यापक परमेश्वर की वन्दना करते हैं, कि इस भव्य भारत वर्ष का ललाट फिर से चमके तथा यहाँ के समस्त निवासियों के नित-नूतन सुन्दर जीवन की रक्षा करें, जिससे भारत देश की सन्तानें बहुत समय तक सुख-समृद्धि से युक्त होकर आनन्दपूर्वक सभी क्षेत्रों में अग्रसर होवें।।१।।

संस्कृते ज्ञानराशिः समुद्दीप्यते
सद्विभक्तं च विज्ञानमभ्यर्ह्यते।
सर्वभूतात्मरूपं समाराजते
संस्कृते राष्ट्रियं वैभवं रक्ष्यते।।२।।

इस राष्ट्र के संस्कृत वाङ्मय में विविध ज्ञान-पुञ्ज सम्यक् प्रकाशित हैं और सत्यस्वरूप परमात्मा का ही विभाजितरूप विज्ञान समादृत है तथा समस्त प्राणियों में उसी ईश्वर का अंश प्रकाशमान है, ऐसे संस्कारित भारत राष्ट्र के परम वैभव की रक्षा हम सब मिलकर करें।।२।।

संस्कृते भव्यभावः सदा काशते
संस्कृते सद्विचारः समाख्यायते।
संस्कृते विश्वबन्धुत्वमुद्घोष्यते
संस्कृते वाङ्मयं साम्प्रतं रक्ष्यते।।३।।

संस्कृत वाङ्मय में भव्य भाव सदा प्रकाशित होता है और इसमें अच्छे विचारों का सम्यक् व्याख्यान किया गया है तथा इसमें विश्वबन्धुत्वभावना की उद्घोषणा की गयी है एवं संस्कृतभाषा में आज भी भारत राष्ट्र की वाङ्मयी मूर्ति सहृदय सज्जन विद्वानों द्वारा सुरक्षित है।।३।।

संस्कृते सौख्यमाभाति सत्यं शिवं
संस्कृते राष्ट्रसौभाग्यमेवार्च्यते।
संस्कृते त्यागदानद्वयं वर्ण्यते
संस्कृते भारतं सर्वथा रक्ष्यते।।४।।

संस्कृत वाङ्मय एवं संस्कारित भारत में सचमुच कल्याण करने वाले सुख की प्रतीति होती है और संस्कृत वाङ्मय एवं संस्कारित भारत में ही राष्ट्र के सौभाग्य की समर्चना की जाती है, संस्कृत भारत में त्याग एवं दान की महिमा वर्णित है और संस्कृत वाङ्मय में यह भारत वर्ष सभी प्रकार से सुरक्षित है।।४।।

**संस्कृते राष्ट्रसम्पत्तिरेव स्थिता**
**संस्कृते राष्ट्रनीतिः समुल्लासिता।**
**संस्कृतेऽमूल्यरत्नं स्वदेशोद्भवं**
**भ्राजतां राष्ट्रभाषा सदा संस्कृता।।५।।**

संस्कृत वाङ्मय (संस्कारित भारत) में ही राष्ट्र की सम्पदा विद्यमान है, संस्कृत (भारत) में ही राष्ट्र की नीति समुल्लसित हो रही है तथा संस्कृत (भारत) में ही स्वदेश में उद्भूत अनेक अमूल्य रत्न देदीप्यमान हो रहे हैं, राष्ट्र की ऐसी संस्कारित भाषा सदा चमकती रहे।।५।।

**संस्कृता यत्र वाणी मनः संस्कृतं**
**संस्कृतं दर्शनं जीवनं संस्कृतम्।**
**संस्कृता राजनीतिर्बलं संस्कृतं**
**भारतं नः पुनर्द्योततां संस्कृतम्।।६।।**

संस्कृत वाङ्मय (संस्कारित भारत) में संस्कारों से परिपूत कर्णप्रिय वाणी बोली जाती है और जहाँ के लोगों का अन्तःकरण निर्मल है तथा जहाँ के समग्र दर्शन आचार से परिशुद्ध एवं जहाँ का जीवन संस्कारयुक्त है तथा जहाँ के राजाओं की नीति संस्कारित एवं जहाँ के राष्ट्रभक्त वीरों में संस्कार व तपस्या से संवर्धित शौर्य विराजमान है, ऐसा हमारा संस्कारित महान् भारत फिर से सारे संसार में चमके।।६।।

संस्कृते काचिदास्ते परा सन्मति-
यां समाश्रित्य निर्मीयते सत्कृतिः।
विश्वकल्याणकल्पद्रुमाधः स्थितिः
सद्विचारैरियं सेव्यते संस्कृतिः।।७।।

संस्कारित भारत और संस्कृतभाषा में कोई विलक्षण तथा श्रेष्ठ ऋतम्भरा प्रज्ञा विराजमान है जिसके द्वारा कमनीय काव्यों की रचना की जाती है, क्योंकि इस भाषा की स्थिति समीप में स्थित विश्वकल्याणकारी कल्पद्रुम की छाया की तरह है। अर्थात् यह भाषा सभी कामनाओं की पूर्ति में तत्काल समर्थ है। इसलिए अच्छे विचारों से भारतीय संस्कृति को अपनायें।।७।।

साङ्गवेदाः समस्ताः पुराणानि कौ
दर्शनं काव्यशास्त्रञ्च नानाविधम्।
लोकसाहित्यमाभाति यत्संस्कृते
राजतां लोकतन्त्रात्मकं भारतम्।।८।।

संस्कृत वाङ्मय (संस्कारित भारत) में पृथिवी पर छः अङ्गों (व्याकरण, ज्यौतिष, शिक्षा, कल्प, छन्द, निरुक्त) के साथ चार (ऋग्, यजुः, साम, अथर्व) वेद, अठारह पुराण, आत्मा के यथार्थ स्वरूप को बतानेवाले विविध दर्शनशास्त्र, अनेकविध काव्यशास्त्र एवं विविध प्रकार के लोकसाहित्य विद्यमान हैं, ऐसा लोकतन्त्रवाला यह संस्कृत भारत देदीप्यमान हो।।८।।

**व्यासभासौ कवी कालिदासस्तथा**
**भारवि-र्माघ-हर्षाश्वघोषादयः।**
**पद्यगद्येषु निर्माय येषां यशो**
**भासतां भारतं वर्णयन्तीत्यदः।।९।।**

संस्कृत वाङ्मय (संस्कारित भारत) में व्यास, भास, कालिदास, भारवि, माघ, हर्ष एवं अश्वघोष आदि कविजन जिस संस्कृत भारत के यश का वर्णन पद्य एवं गद्य काव्यों में करते हैं, ऐसा यह भारतवर्ष सुशोभित हो॥९॥

**संस्कृते सूत्रशैल्या नवोन्मेषितं**
**ब्रह्मसूत्रादि भाष्यादि पातञ्जलम्।**
**पाणिनीयन्तु विश्वस्य विस्मापकं**
**राजते शब्दसाधुत्वसम्पादकम्।।१०।।**

संस्कृत में सूत्रात्मक शैली द्वारा समारचित ब्रह्मसूत्र, न्यायसूत्र, कणादसूत्र, सांख्यसूत्र, योगसूत्र एवं जैमिनिसूत्र तथा शांकरभाष्य और पातञ्जल महाभाष्य आदि भाष्यग्रन्थ समुपलब्ध हैं। साथ ही सम्पूर्ण विश्व को आश्चर्यचकित कर देने वाला शब्दसाधुत्वसम्पादक पाणिनीयव्याकरण (अष्टाध्यायी) भी इसी संस्कृतभाषा में विराजमान है॥१०॥

बुद्धिशुद्ध्यर्थमध्यात्मविद्यान्वितं
लक्षणं वाग्विशुद्ध्यर्थमाराजते।
चारकं सौश्रुतं शल्यकर्माश्रितं
भेषजं कायमाधाय संसृज्यते।।११।।

बुद्धिशुद्धि के लिए अध्यात्मविद्या (दर्शनशास्त्र) और वाणी की शुद्धि के लिए लक्षण (व्याकरण) शास्त्र इसमें विराजमान है तथा शरीर की समुचित चिकित्सा के लिए शल्यकर्म पर आश्रित महर्षि चरक की चरकसंहिता, महर्षि सुश्रुत की सुश्रुतसंहिता आदि भैषज्य (आयुर्वेद) शास्त्र भी इसी संस्कृतभाषा में निर्मित है।।११।।

व्यासवाल्मीकिबाणादिभिर्निर्मितं
भारतं रम्यरामायणं विश्रुतम्।
मोदयत्येव चान्तःकरोत्युज्ज्वलं
लोकचित्तं हि कादम्बरीसंयुतम्।।१२।।

व्यास, वाल्मीकि, बाणभट्ट आदि ऋषियों व ऋषिकल्प विद्वानों द्वारा निर्मित प्रसिद्ध महाभारत, रमणीय रामायण एवं कमनीय कादम्बरी इसी (संस्कृत) में विरचित है, जो आज भी लोगों के चित्त को प्रफुल्लित (आनन्दित) एवं अन्तःकरण को स्वच्छ और प्रोज्ज्वलित करते रहते हैं।।१२।।

वेदगीतास्मृतिश्रव्यकाव्यादिभिः
संस्कृते संविधानं समाख्याप्यते।
यत्र वंशं रघोः कालिदासोद्भवं
नित्यशो हृद्यमाजीवनं सेव्यते।।१३।।

संस्कृत में नियमों (संविधान या कानून) की व्यवस्था वेद, गीता, स्मृति आदि श्रव्य काव्यों द्वारा की जाती है। जहाँ कवि एवं सहृदय सज्जन द्वारा कालिदास विरचित रघुवंश का आजीवन हृदय से सम्मान (अध्ययन-अध्यापन) किया जाता है।।१३।।

विश्वभूताश्रितं संस्कृतं मान्यतां
सर्वभद्रान्वितं भारतं वन्द्यताम्।
व्याधिमुक्ता भवेयुः प्रजाः काम्यतां
कुत्रचिद् दुःखलेशो न वा कल्प्यताम्।।१४।।

विश्व के सभी प्राणियों पर आश्रित संस्कृत और संस्कृत पर आश्रित वे हैं- ऐसा मान लीजिये। इसलिए सभी शुभ एवं कल्याणकारी विचारों से युक्त इस संस्कारित भारत की वन्दना कीजिए, सारी प्रजायें व्याधिमुक्त और सुखी हों ऐसी कामना कीजिए और कहीं पर भी दुःख का लेश तक न रहे- ऐसी कल्पना कीजिये अर्थात् ऐसा संकल्प लीजिए।।१४।।

संस्कृतं वाङ्मयं राष्ट्रभूत्याश्रितं
नैकगीतायुतं भारतं वन्द्यताम्।
संस्कृतं विश्वकल्याणकामाश्रितं
पठ्यतां भारतं नित्यमावर्धताम्।।१५।।

राष्ट्र की विभूतियों (ऐश्वर्य या उत्कर्ष) से समन्वित संस्कृत-वाङ्मय अनेक गीताओं से युक्त तथा प्रकाशरत है, अतः संस्कृत एवं भारत की वन्दना करें; विश्वकल्याण की कामना करने वाली संस्कृतभाषा का अध्ययन करें और नित्य ही इस दीप्त सनातन भारत राष्ट्र को सभी ओर से समग्र संसाधनों से आगे बढ़ायें।।१५।।

सर्वनद्यो जलैः सम्भृताः स्युस्तथा
मातृगावःप्रयच्छन्तु दुग्धाऽमृतम्।
मानवैः पादपा रक्षणीयाः सदा
तेषु नश्यत्सु नङ्क्ष्यन्ति सर्वे स्वयम्।।१६।।

अपनी-अपनी क्रियाओं से युक्त व अपनी दिव्य और स्वच्छ जलप्रवाहों से कलकल करती हुई सभी नदियाँ विलसित (सुशोभित) होती रहें। गो-माताएँ दुग्धरूप अमृत को प्रदान करें और मनुष्य हमेशा वृक्षों की रक्षा में तत्पर रहें। क्योंकि इनके नष्ट हो जाने पर सब कुछ स्वयं नष्ट हो जायेगा अर्थात् सर्वनाश स्वतः हो जायेगा।।१६।।

अत्र रक्ष्या धरा भूधरैर्भूर्षिता
वायुशुद्ध्या समं चाऽन्तरिक्षं जलम्।
संस्कृतिः वर्तते काचिदस्य स्थिरा
प्राप्यते रक्षिते सर्वजीवे सुखम्।।१७।।

यहाँ भूमि को धारण करने वाले समस्त पर्वतों से समृद्ध एवं सुशोभित वसुन्धरा पृथ्वी की रक्षा होनी चाहिये और वायु (हवा) की परिशुद्धि के साथ अन्तरिक्ष (आकाश) एवं जल (पानी) का संरक्षण होना चाहिये, क्योंकि यहाँ की यह एक अनिर्वचनीय सुदृढ़ संस्कृति है कि सभी जीवों की रक्षा (सुखी) होने पर ही मनुष्य भी सुख को प्राप्त कर सकता है।।१७।।

मारुतो रक्ष्यतां पावको रक्ष्यतां
मण्डलं सर्वयत्नेन संरक्ष्यताम्।
ऋद्धिसिद्धिप्रसिद्धीर्यदा वाञ्छति
प्राच्यशास्त्रानुसारं सुखं जीव्यताम्।।१८।।

हवा की रक्षा करें, पावक (अग्नि) की रक्षा करें, अर्थात् सभी प्रकार के यत्नों से इस भूमण्डल (पर्यावरण) की रक्षा करें और अपने लिए ऋद्धि, सिद्धि और प्रसिद्धि- तीनों चाहते हैं तो प्राचीन शास्त्रों के अनुसार सुखपूर्वक अपना जीवन व्यतीत करें।।१८।।

साम्प्रतं चर्चया व्याप्तमेतज्जग-
न्मण्डलाच्छादनं नो जनैर्दूष्यताम्।
भौतिकैः कर्मजालैर्धरा धर्षिता
सद्बुधैर्बन्धनाद् यत्नतो मुच्यताम्।।१९।।

इस समय चर्चामात्र से व्याप्त इस जगन्मण्डलाच्छादन (पर्यावरण) को लोग दूषित न करें। क्योंकि भौतिक कर्मजालों से यह पृथ्वी पीडित होती जा रही है, अतः बुद्धिजीवी लोग (या विद्वज्जन) यत्नपूर्वक इसे बन्धन से मुक्त करें और इसकी रक्षा करें।।१९।।

जीवितुं स्वीयशैल्या समो वाञ्छति
स्थावरो जङ्गमश्चाऽत्र राष्ट्रे सदा।
निर्मलाकाशवायुं जलं कांक्षते
पीड्यतां नो प्रपञ्चैर्धरा भूरिदा।।२०।।

आप अपनी शैली से अर्थात् स्वतन्त्र रूप से जीना चाहते हैं तो इस राष्ट्र में स्थावर हो या जंगम-किसी को कभी भी प्रताड़ित न करें और यदि आप निर्मल आकाश, स्वच्छ वायु एवं स्वच्छ जल चाहते हैं तो कभी भी सर्वस्व प्रदान करने वाली इस वसुन्धरा को अनावश्यक प्रपञ्चों से पीड़ित न करें।।२०।।

स्वेच्छया निर्मितोच्चैर्महार्घैर्गृहैः
कम्पते मे धरा भारबाहुल्यतः।
मानवस्तेयकृत्यैर्भृशं मूर्च्छिता
पश्यति स्वीयवत्साननं सर्वतः।।२१।।

अपनी स्वच्छन्द इच्छा से निर्मित बड़े-बड़े विशाल भवनों के भाराधिक्य से हमारी पृथ्वी काँप रही है तथा मानवों के इस चोरीरूप कुकर्म से अत्यन्त मूर्च्छित होकर सभी ओर से अपने पुत्रों का मुँह देख रही है॥२१॥

पूर्वजानां नृपाणां तपश्चर्यया
स्वर्गतश्चागता स्वर्णदी दूष्यते।
सौख्यमाप्स्यन्ति चात्मन्यहो ते कथं
जीवनाधारगङ्गा जनै रुद्ध्यते।।२२।।

हमारे पूर्वज राजाओं की कठिनतम तपस्या के द्वारा स्वर्ग से आयी इस पतितपावनी गंगा को भी इस समय प्रदूषित किया जा रहा है। जब हमारे जीवन के आधार इस गंगा को ही लोग अवरुद्ध कर दे रहे हैं तो फिर वे लोग कैसे अपने-आप में सुख की अनुभूति कर सकते हैं? अर्थात् वे कभी-भी सुख प्राप्त नहीं कर सकते॥२२॥

आत्मभोगाभिलाषस्य सम्पूर्त्तये
प्राकृतं वैभवं यैर्वनं छिद्यते।
आत्मनोऽहङ्कृतेश्चाऽत्र सम्पुष्टये
मातृभूमेर्भविष्यं न तै रक्ष्यते।।२३।।

अपने भोग की अभिलाषा की सम्पूर्ति के लिए जो लोग प्राकृतिक सम्पदारूप वनों को काट रहे हैं, वे अपने अहंकार की पुष्टि के लिए कभी भी मातृभूमि के भविष्य की सुरक्षा नहीं कर सकते।।२३।।

मातृशृङ्गारभूतास्त्विमे पादपा
नैव छेद्या कदापि जनैः साम्प्रतम्।
तद्विनष्टेषु रुष्टाऽमृता मे धरा
सन्ततिभ्यो न दास्यत्यलं काङ्क्षितम्।।२४।।

सम्पूर्ण वृक्ष मातृभूमि के शृंगाररूप हैं, अतः कभी-भी उन्हें काटना नहीं चाहिये। क्योंकि वृक्षों के नष्ट हो जाने पर अमृतरूप यह वसुन्धरा माँ रुष्ट एवं मृत होकर कभी भी अपनी सन्तति को अभीष्ट वस्तु प्रदान नहीं कर सकती।।२४।।

सत्यशीलात्मभिर्भारतीयैः पुनः
कर्मभूभारतं यत्नतो रक्ष्यते।
भोगभूमिर्यतोऽन्यास्ति सर्वा धरा
यत्र लोकश्चलं जीवनं काङ्क्षते।।२५।।

सत्य का पालन करने वाले भारतीय यत्नपूर्वक इस कर्मभूमि भारत की रक्षा किया करते हैं। क्योंकि भारत से अतिरिक्त सम्पूर्ण भूमि भोगभूमि है, जहाँ लोग केवल क्षणिक आनन्द एवं भौतिक जीवन की कामना करते हैं।।२५।।

भारतं नर्मदातुङ्गभद्रान्वितं
गङ्गगोदावरीवीचिभिः क्षालितम्।
प्राङ्गणे सर्वलोके पुनः काशतां
श्यामलं प्रोज्ज्वलं शैलराजाश्रितम्।।२६।।

नर्मदा एवं तुंगभद्रा से अलंकृत, गंगा और गोदावरी की तरंगों से प्रक्षालित, फसलों की हरियाली से लहलहाता हुआ श्यामवर्ण वाला, शैलराज हिमालय से सुशोभित, स्वच्छ एवं उज्ज्वल यह भारत वर्ष सम्पूर्ण लोकों के प्राङ्गण में पुनः देदीप्यमान हो।।२६।।

क्षुद्रकामाय नाप्तं वपुर्मानवं
सर्वदेशस्थितैः सज्जनैश्चिन्त्यताम्।
पूर्वजन्मार्जितं कार्यमालोच्यतां
सत्सु कार्येषु चित्तं समाधीयताम्।।२७।।

यह मानव शरीर छोटी-छोटी कामनाओं के लिए नहीं प्राप्त हुआ है- इस पर सभी देशों के वासी सज्जनवृन्द विचार करें और पूर्वजन्मार्जित कार्य की आलोचना करते हुए अच्छे कर्मों में चित्त को लगावें अर्थात् मन को सत्कर्म में प्रेरित करें।।२७।।

नैकमार्गाश्रितं भिन्नदेवाश्रितं
दिव्यधामाश्रितं सद्विचाराश्रितम्।
द्योततां मे पुनर्भारतं संस्कृतं
वैभवैः संयुतं मन्त्रतन्त्राऽन्वितम्।।२८।।

अनेक मार्गों व सम्प्रदायों से युक्त, विभिन्न देवताओं से सुशोभित, अनेक दिव्य धामों से अलंकृत, सद्विचारों से रञ्जित (सना हुआ), वैभवों से विलसित, तन्त्र-मन्त्रों से संयुक्त और शुभसंस्कारों से युक्त मेरा यह भारत फिर से प्रकाशमान हो। अमित तेजपुञ्जों से पुञ्जित हो।।२८।।

भास्वरज्ञानपुञ्जं च मोहापहं
यत्र लोभं प्रमादं विना काङ्क्षते।
भारतं मामकीनं सदा नन्दतां
गर्हितं कर्म सन्मानवैस्त्यज्यते।।२९।।

जहाँ लोभ एवं प्रमाद के बिना लोग मोह को नष्ट कर देने वाले तेजस्वी ज्ञानपुञ्ज की कामना करते हैं और सज्जनों द्वारा गर्हित (निन्दित) कर्म का परित्याग कर दिया जाता है, वह हमारा महान् भारत देश हमेशा के लिए आनन्द से परिपूर्ण हो।।२९।।

मानवान् शिक्षयन्तो गुणैर्भूषिता
विश्वविद्यालया यत्र संस्कुर्वते।
आश्रमाः शिक्षयन्ति स्वधर्मे रतान्
तद्धि राष्ट्रं तपःपूतमादीप्यते।।३०।।

जहाँ मानवों को शिक्षित करते हुए, सद्गुणों से विभूषित विश्वविद्यालय स्वयं लोगों में संस्कार का सञ्चार करते हैं; जहाँ आश्रम अपने-अपने धर्म में लगे रहने की शिक्षा देते हैं, वह तपःपूत (तपस्या से पवित्र) राष्ट्र अवश्य ही दीप्तिमान् (देदीप्यमान या प्रकाशमान) होता है।।३०।।

प्रीतिकीर्त्त्यास्पदं मानदानादिकं
योग्यताभिः सदा मानवैः प्राप्यताम्।
कामिनीभिर्मुदाबालवृद्धो युवा
प्राङ्गणे भारतस्य पुनश्चैधताम्।।३१।।

मनुष्य अपनी योग्यता से प्रीति, कीर्ति, मान-सम्मान, दान आदि को प्राप्त करें और कमनीय कामिनियों के साथ प्रसन्न बाल, वृद्ध, युवा सभी भारत के प्रांगण में पुनः समृद्धिशाली बनें।।३१।।

स्त्री हि सर्वा च मात्रा समा मान्यते
देवतुल्यस्तथा सद्गुरुः पूज्यते।
पुत्रतुल्यश्च शिष्यः सदा मन्यते
पावनं भारतं तन्मुदा सेव्यते।।३२।।

जहाँ सभी स्त्रियाँ मातृवत् मानी जाती हैं, सद्गुरु देवता-तुल्य माने जाते हैं और शिष्य पुत्र की तरह माना जाता है; उस पावन भारत का प्रसन्नतापूर्वक हम सेवन (वन्दन व अभिनन्दन) करते हैं।।३२।।

**कन्दरामध्यशर्वः शिवो राजते**
**पर्वते पर्वते शक्तिराराध्यते।**
**यत्र गङ्गाजलं पूतमासाद्यते**
**पुण्यदं शान्तिदं भारतं नम्यते।।३३।।**

जहाँ कन्दराओं के बीच कल्याणकारी शिव विराजमान रहते हैं, पर्वत-पर्वत पर शक्ति की आराधना की जाती है और जहाँ गंगाजल को अत्यन्त पवित्र मानकर श्रद्धापूर्वक घर-घर स्थापित किया जाता है, उस पुण्य और शान्ति को प्रदान करने वाले भारत को नमस्कार है।।३३।।

**सद्गुणाधानरामो जनैः पूज्यते**
**कृष्णगोपालबालोऽत्र सङ्कीर्त्यते।**
**सद्गुरुग्रन्थपैगम्बरो गीयते**
**सच्छ्रिये चाऽमृताय प्रभुः प्रार्थ्यते।।३४।।**

यहाँ लोगों द्वारा बड़ी ही श्रद्धा से सद्गुणों के सागर भगवान् श्रीराम का पूजन किया जाता है, गोपाल-बाल भगवान् श्रीकृष्ण का संकीर्तन किया जाता है, सद्गुरुग्रन्थ पैगम्बर का गान किया जाता है और श्री एवं अमृत के लिए प्रभु की प्रार्थना की जाती है।।३४।।

विश्वनाथोऽत्र लिङ्गात्मको भारते
भिन्ननाम्ना प्रभुर्मन्दिरे राजते।
अष्टमूर्तिं तनुं सन्निधत्ते विभु-
र्लोकमाङ्गल्यमाजीवनं काम्यते।।३५।।

इस भारत में भगवान् विश्वनाथ लिङ्गरूप में विभिन्न नामों से मन्दिरों में अवस्थित हैं। विभु (शिव) क्षिति, जल, तेज, वायु, आकाश, सूर्य, सोम और यजमान रूप अष्टमूर्ति तनु को धारण करते हैं तथा यहाँ लोकमंगल की आजीवन कामना की जाती है।।३५।।

धेनुनागौ सुपूज्यौ हि यद्भारते
नीलकण्ठो विहङ्गश्च सम्मान्यते।
भारतं सादरं तन्नमामो वयं
सर्वदा कुम्भपर्व प्रतिष्ठाप्यते।।३६।।

जिस भारत में धेनु और नाग दोनों ही पूजनीय हैं और नीलकण्ठ नामक पक्षी को भी सम्मानित किया जाता है, उस भारत को हमलोग सादर प्रणाम करते हैं, जहाँ सर्वदा कुम्भपर्व को प्रतिष्ठापित किया जाता है।।३६।।

ब्रह्मपुत्रश्च शोणो नदः शोभते
शैलराजे शिवश्चोमया द्योतते।
यत्र कीराङ्गनाः सत्कृतिं कुर्वते
सौख्यदं संस्कृतं भारतं विद्यते।।३७।।

जहाँ ब्रह्मपुत्र और शोण (सोन) नद सुशोभित हो रहे हैं, हिमालय पर भगवती उमा के साथ भगवान् शिव विराजमान हैं और जहाँ की कीराङ्गनायें भी सत्कृति के लिए तत्पर रहती हैं- ऐसा हमारा यह संस्कारित एवं सुख को प्रदान करने वाला भारत विद्यमान है।।३७।।

सद्गतिं कामयन्तेऽत्र ये मानवा
देवभक्तिं सतां सङ्गतिं तन्वते।
भेदभावं परित्यज्य सर्वात्मसु
स्वीयकर्म प्रभोराज्ञया कुर्वते।।३८।।

यहाँ जो मानव सद्गति चाहते हैं वे देवभक्ति एवं सज्जनसंगति में अपने समय को व्यतीत करते हैं और सभी प्राणियों में भेद-भावों का परित्याग करके प्रभु की आज्ञा (मानकर) से अपने-अपने कर्तव्यों का पालन करते हैं।।३८।।

सञ्चिताज्ञानजं पापपुण्याश्रितं
कर्मजातं सदा मानवा भुञ्जते।
शङ्कनीया न ते चात्मबोधं विना
दोषदृष्टिं परेषु स्वयं कुर्वते।।३९।।

मनुष्य अपने संचित अज्ञान से उत्पन्न एवं पाप-पुण्य पर आश्रित कर्मफलों का उपभोग करते हैं। अतः वे शंका के पात्र नहीं हैं क्योंकि आत्मज्ञान के विना वे दूसरों पर दोषारोपण करते हैं। अर्थात् वस्तुतः दोष किसी व्यक्ति विशेष का नहीं है, वे सब अपने-अपने पूर्वजन्मार्जित कर्मफलों का ही भोग करते हैं॥३९॥

हिंस्रजीवाश्च कुर्वन्ति रागं मिथो
वैरभावोऽत्र नः सज्जनैस्त्यज्यताम्।
मानुषं जन्म सम्प्राप्य किं कुर्वते
कर्म पुण्यात्मकं पापजं चिन्त्यताम्।।४०।।

यहाँ हिंसक जीव भी आपस में प्रेमभाव बनाये रखते हैं। अतः सभी सभ्य मानवों को पारस्परिक वैरभाव का परित्याग कर देना चाहिये और मनुष्य जन्म पाकर वे क्या कर रहे हैं? पुण्य कर रहे हैं कि पापकर्म कर रहे हैं?- इसका चिन्तन करना चाहिये॥४०॥

**जन्म पुण्याधिकाद् भारते जायते**
**तत्र दिव्यं तपोभिर्वपुर्भूष्यताम्।**
**विद्यया वैभवैर्वाग्भिराचारतः**
**सत्कवित्वेन पृथ्वीमलङ्कुर्वताम्।।४१।।**

पुण्य के आधिक्य होने पर (अर्थात् कई जन्मों के पुण्य जब एकत्रित होते हैं तो) भारत में जन्म होता है। अतः यहाँ इस दिव्य शरीर को तपों से विभूषित करना चाहिये एवं विद्या से, वैभवों से, वाणी से, आचार से और सत्कवित्व से इस भव्य भूमि को अलंकृत करना चाहिये।।४१।।

**सद्गतिः संस्कृता सङ्गतिः संस्कृता**
**संस्तुतिः संस्कृता प्रस्तुतिः संस्कृता।**
**यत्र संराजते सत्कृतिः संस्कृता**
**कामधेनोः समेयं धरैवाऽमृता।।४२।।**

जहाँ सद्गति संस्कारित है, संगति संस्कारित है, संस्तुति संस्कारित है, प्रस्तुति संस्कारित है और सत्कृति भी (रचनायें) संस्कारित है- ऐसी कामधेनु के समान यह वसुन्धरा अमृत-स्वरूपा ही है।।४२।।

यल्लसन्मस्तकं मन्दिरैर्मस्जिदै-
श्चर्चसच्छ्रीगुरुद्वारकैराश्रमैः।
तत्पुराणोक्तचर्चाकथासुस्वरै-
र्भारतं भासतां भास्वरैः सद्गुणैः।।४३।।

जिसका मस्तक मन्दिरों से, मस्जिदों से, चर्च, गुरुद्वारा एवं अनेक आश्रमों व सम्प्रदायों से सुशोभित है, वह भारत पुराणोक्त चर्चा एवं कथाओं के सुमधुर स्वरों से और तेजस्वी सद्गुणों से पुनः देदीप्यमान हो।।४३।।

सत्कथा श्रूयतां सत्सभा सेव्यतां
स्वव्यथा त्यज्यतां दुःखितो दृश्यताम्।
ज्ञानदीपश्च चित्ते सदा ज्वाल्यतां
भारते हृद्गतं कल्मषं क्षाल्यताम्।।४४।।

भारत में सत्कथा का श्रवण करना चाहिये, सत्सभा का सेवन करना चाहिये, अपनी व्यथाओं का परित्याग करना चाहिये, दुःखी जनों पर दृष्टि बनाये रखनी चाहिये, चित्त में सदा ज्ञानरूप दीप को प्रज्वलित करना चाहिये और हृदयगत सभी कल्मषों (पापों) का प्रक्षालन कर लेना चाहिये।।४४।।

**विश्वविस्मापिका सर्वभूतात्मिका**
**बद्धयन्त्रा सुतन्त्रा स्वमन्त्रात्मिका।**
**भुक्तिमुक्तिप्रदा लोकतन्त्रात्मिका**
**भूष्यतां कर्मभूर्भव्यशालात्मिका।।४५।।**

विश्व को विस्मित (आश्चर्यचकित) कर देने वाली सभी प्राणियों को अपनी आत्मा मानने वाली, बद्धयन्त्र वाली, सुतन्त्र से युक्त स्वतन्त्र विचार वाली, भुक्ति एवं मुक्ति को प्रदान करने वाली और लोकतन्त्र ही है आत्मा जिसकी- ऐसी इस भव्यशालात्मिका कर्मभूमि को विभूषित करें।।४५।।

**वैभवप्राप्तिकामः समर्थो ह्यतः**
**श्रेष्ठदेशोऽधुना भूतले वर्धते।**
**सन्ति राणाशिवाबोसगान्धीसमा**
**यैरयं द्वीपपूज्योऽत्र संरक्ष्यते।।४६।।**

वैभव-प्राप्ति की कामना करने वाले, समर्थ एवं श्रेष्ठ देश इस समय भूतल पर आगे बढ़ रहे हैं और महाराणाप्रताप सिंह, शिवाजी महाराज, सुभाषचन्द्र बोस, महात्मा गान्धी जैसे भी महापुरुष हैं जिनके द्वारा सभी द्वीपों में पूज्य जम्बूद्वीप में स्थित यह भारत देश आज भी संरक्षित है।।४६।।

ज्ञानविज्ञानभाभास्वरं सुन्दरं
तीर्थधामान्वितं पावनं भारतम्।
त्यागतोषश्रमाशायुतं शंसितं
ज्ञायतां देववृन्दैर्मुदा संस्तुतम्।।४७।।

ज्ञान और विज्ञान की आभाओं से प्रकाशमान, सुन्दर एवं अनेक तीर्थों से विभूषित यह पावन भारत, ऐसा देश है जो त्याग, सन्तोष, श्रम एवं आशा से युक्त, प्रशंसा के योग्य और देवताओं द्वारा संस्तुत है। अर्थात् देववृन्दों ने भी इस देश की स्तुति की है ऐसा जान लीजिए।।४७।।

संस्करोत्यत्र सूर्यश्च चन्द्रः स्वतः
स्थावरान् जङ्गमान् रश्मिजालैः सदा।
सन्तनोतीति शक्तिं शिवा कालिका
सेव्यतां संस्कृतं भारतं तन्मुदा।।४८।।

जिस देश के स्थावरों एवं जंगमों का संस्कार अपने रश्मिजालों से स्वयं सूर्य और चन्द्रमा किया करते हैं, और शिवा (कल्याणकारिणी) कालिका स्वयं शक्ति का विस्तार करती है, उस शुभसंस्कारों से संस्कारित भारत की प्रसन्नतापूर्वक सेवा करनी चाहिये।।४८।।

मातृभूम्या जनन्या च लोभं विना
सन्ततिभ्यः स्वयं सर्वमादीयते।
सा समर्च्या समैर्भारतीयैर्मुदा
भक्तिभावेन श्रद्धाञ्जलिरर्प्यते।।४९।।

यहाँ जन्म देने वाली माँ एवं मातृभूमि किसी भी प्रकार के लोभ के बिना अपनी सन्तति के लिए सब कुछ ग्रहण करती है और सर्वस्व प्रदान भी करती है। यह सभी भारतीयों के द्वारा प्रसन्नमन से अर्चना करने योग्य है। अतः हम उन्हें भक्तिभाव से श्रद्धाञ्जलि समर्पित कर रहे हैं।।४९।।

शान्तये सर्वशास्त्रं नवं निर्मितं
पूर्वजप्राप्तबोधेन यच्चर्च्यते।
हंसदृष्ट्या समालोच्य सर्वं हि तद्
भारतीयैः सदा गृह्यते त्यज्यते।।५०।।

यहाँ शान्ति के लिए अनेक नूतन व प्राचीन शास्त्रों का निर्माण हुआ, जिनका पूर्वजों से प्राप्त ज्ञान द्वारा सर्वदा सम्मान किया जाता है। भारतीय लोग उन सबकी हंस (नीर-क्षीरविवेक) दृष्टि से समालोचना कर ग्रहण करने योग्य का ग्रहण और त्याज्य का परित्याग कर देते हैं।।५०।।

आत्मनो दुर्विचारः परित्यज्यतां
यो विवादो मिथोऽसौ समुत्सार्यताम्।
ईश्वरे निर्भरं चित्तमाधीयतां
शास्त्रवाग्भिर्मनःपूतमाचर्यताम्।।५१।।

अपने दुर्विचारों का परित्याग कर दें, जो आपस में विवाद है, उसको दूर हटा दें, ईश्वर में विश्वासपूर्वक अपने चित्त को लगा दें और शास्त्रों के उपदेश से मन को पवित्र कर समुचित व्यवहार करें।।५१।।

देहनाशात्परं सर्वमत्रस्थितं
वित्तपुत्रादिकं वै परित्यज्यते।
स्थीयते कीर्तिरस्मिन् हि भूमण्डले
सत्यधर्मेण जीवश्च जेजीव्यते।।५२।।

देह नाश के बाद इस लोक में स्थित धन पुत्र आदि सबका परित्याग हो जाता है। अर्थात् सबकुछ छूट जाता है, केवल मनुष्य की कीर्ति ही इस भूमण्डल पर शेष रह जाती है तथा सत्यधर्म से अर्थात् अपने कर्मों से समुत्पन्न अदृष्ट द्वारा जीव बार-बार अपना आनन्दमय जीवन व्यतीत करता है। अतः हमारी कीर्ति अमर रहे- इसके लिए हमेशा सत्कर्म करना चाहिये।।५२।।

दुःखितानां ततः कष्टमासोढ्यतां
सर्वजीवस्य रक्षार्थमुद्यम्यताम्।
श्रेष्ठधर्मं विचार्यैव भो मानवाः!
धर्मतेजो महद् भारतं वन्द्यताम्।।५३।।

इसलिए दुःखितों के दुःख का निवारण करें और सभी जीवों की रक्षा के लिए प्रयत्न करें। हे मान्यवर! श्रेष्ठ मानव धर्म का विचार कर धर्मरूप तेज से देदीप्यमान इस महान् भारत की वन्दना करें।।५३।।

सर्वथा सत्क्रियां कर्त्तुमभ्यस्यतां
जातिवर्गादिभेदः समुत्सार्यताम्।
ब्रह्मणश्चात्मजाः सन्ति सर्वे जना
नीडमेकं महद् विश्वमुद्घोष्यताम्।।५४।।

हमेशा सत्कर्म करने का अभ्यास करना चाहिये और जाति एवं वर्ग आदि के भेद-भाव का परित्याग कर देना चाहिये। हम सब एक ही अमृतरूप परम पिता परमेश्वर ब्रह्म के पुत्र हैं और यह महान् विश्व हम सबका एक ही घोसला है इसका समाज में उद्घोष (प्रचार) करना चाहिये।।५४।।

मानवैर्भारतप्राङ्गणे नन्द्यतां
ज्ञानपुञ्जप्रभाभिर्मनो दीप्यताम्।
द्वेषरागात्मकं मानसं क्षाल्यतां
सर्वदा संस्कृते भारते मोदताम्।।५५।।

इस भारत के प्रांगण में सभी मनुष्य आनन्द से परिपूर्ण हों, ज्ञानपुञ्ज के प्रभाव से अपने मन को प्रकाशित करें, राग-द्वेष से दूषित इस मन का प्रक्षालन कर लें और इस संस्कारित भारत में सर्वदा सब लोग प्रसन्न होकर रमण करें।।५५।।

मन्त्रतन्त्रात्मकज्ञानकर्मास्थया
गोर्गुरूणां पितॄणां च सत्सेवया।
याप्यतामात्मनो जीवनं शिक्षया
भूष्यतामात्मभालो भुवः श्रद्धया।।५६।।

मन्त्र-तन्त्रात्मक विविध ज्ञान और शास्त्रानुमोदित स्वधर्मरूपी निश्चित कर्म में आस्था रखते हुए इनके द्वारा तथा सत्सेवा से गौ, गुरु और माता-पिता आदि श्रेष्ठ लोगों को तृप्तकर सन्तुष्ट करें, साथ ही सत्शिक्षा से शिक्षित होकर अपना जीवन आनन्दपूर्वक व्यतीत करें और अपनी मातृभूमि के प्रति अपार श्रद्धाभाव से अपने भाल (ललाट) को विभूषित करें।।५६।।

एष आत्मा सदा सुस्थिरस्वान्तग-
स्तन्मनश्चञ्चलं भाति नो भौतिकम्।
शान्तपात्रे यथा स्नेहमास्थीयते
तद्वदेवाऽत्र कार्यं भवेद् यौगिकम्।।५७।।

यह आत्मा सदा निर्मल व शान्त हृदय में रहने वाला है इसलिए इसको भौतिक प्रपञ्चों से चंचल मन अच्छा नहीं लगता है। जैसे शान्त पात्र में तैल आदि स्नेह स्थिर रहता है, उसी प्रकार इस भारत वर्ष में रहनेवाले लोगों द्वारा भी कर्त्तव्य-अकर्त्तव्य के बोध से योगयुक्त होकर सम्पूर्ण सत्कार्य हों।।५७।।

निर्धना बालवृद्धस्त्रियो दुःखिताः
शोकसन्तप्तराष्ट्रे समग्रे ह्यतः।
भौतिकं कामवस्त्वल्पमासेव्यतां
दुःखमावर्धते कामनाधिक्यतः।।५८।।

शोक से व्याकुल सम्पूर्ण राष्ट्र में निर्धन, बालक, वृद्ध एवं स्त्रियाँ इसलिए अत्यन्त दुःखपीड़ित हैं, क्योंकि उनकी इच्छायें बढ़ती जा रही हैं, अतः भौतिक काम की वस्तुओं का सेवन समुचित रूप में कम से कम करें, क्योंकि कामनाओं के बढ़ने से दुःख बढ़ता ही है, शान्त नहीं होता।।५८।।

काचिदासीन्नवा पूर्वजानां परा
जीवनायाऽत्र सा रीतिरालम्ब्यताम्।
तैः प्रसन्नात्मभिः सन्मतिप्राप्तये
दिव्यभर्गो विभोः प्रार्थितं चिन्त्यताम्।।५९।।

शान्त होकर सुखद जीवनयापन के लिए हमारे पूर्वजों की एक अपूर्व एवं विलक्षण उत्कृष्ट जीवन पद्धति थी, हम सबको इस देश में उसी रीति का अनुसरण करना चाहिये। क्योंकि उन प्रसन्नात्मा ऋषियों ने सद्बुद्धि की प्राप्ति के लिए विभु के जिस दिव्य तेज की प्रार्थना की, उसका हमें पुनः पुनः चिन्तन करना चाहिये।।५९।।

तद् वरेण्यं महः प्राप्नुयुर्मानवाः
प्राप्नुयात्तेन सर्वं जगद् वैभवम्।
क्रोधलोभात्महिंसा परित्यज्यतां
भारते सार्थकं याप्यतां जीवनम्।।६०।।

सविता (सूर्य) के उस वरेण्य तेज को मानव प्राप्त करें, जिसके द्वारा जगत् सम्पूर्ण वैभव को प्राप्त करे। साथ ही क्रोध, लोभ एवं आत्महत्या का परित्याग करें और इस भव्य भारत वर्ष में सार्थक जीवन व्यतीत करें।।६०।।

योगयुक्ता भवन्त्यत्र ये मानवाः
कर्मणां सिद्धये ते यतन्ते सदा।
नो द्विषन्ति स्वतश्चात्मना सज्जनान्
कुर्वतेऽहर्निशं देशभक्तिं मुदा।।६१।।

यहाँ जो मनुष्य योगयुक्त अर्थात् योगी होते हैं, वे हमेशा कर्मों की सिद्धि के लिए प्रयत्न करते हैं। वे कभी किसी भी व्यक्ति से द्वेष नहीं करते, बल्कि प्रसन्नचित्त से रात-दिन देशभक्ति द्वारा अपने देवों ऋषियों और पितरों को सदा प्रसन्न किया करते हैं।।६१।।

नित्यनैमित्तिकोपासनाकर्मठा
भक्तवीराश्च स्युर्योद्धुमभ्युद्यताः।
त्याज्यकाम्ये विहायेप्सिताः सत्क्रियाः
कुर्वते राष्ट्रभूत्यै स्वधर्मव्रताः।।६२।।

जो स्वधर्मावलम्बी राष्ट्र की विभूतियों (ऐश्वर्य) के लिए निषिद्ध एवं काम्य (स्वार्थपरक) कर्मों का परित्याग कर ईप्सित सत्क्रियाओं को करते हैं, वे हमारे देश के भक्तवीर नित्यकर्म, नैमित्तिक कर्म और उपासना कर्म में कर्मठ होते हुए राष्ट्र की रक्षा हेतु युद्ध के लिए भी तैयार और सावधान रहें।।६२।।

कायवाणीमनोभिस्तपो मानवै-
यंज्ञदानात्मकं नित्यमाचर्यताम्।
त्रीणि पुण्यानि चोक्तान्यतो भारते
सद्भिरादिष्टमार्गेण सङ्गम्यताम्।।६३।।

मनुष्यों को चाहिये कि वे शरीर, वाणी और मन से प्रतिदिन यज्ञ, दान और तपरूप पवित्र कर्म किया करें, क्योंकि भारत में इन तीन प्रकार के कर्मों को अत्यन्त पावन कहा गया है। अतः सज्जनों या महापुरुषों के द्वारा बताये गये मार्गों का ही अनुसरण करना चाहिये।।६३।।

सत्यशीलैस्तपस्तोषसेवाश्रमै-
रुज्ज्वलैः सच्चरित्रैर्विचाराऽञ्चिते।
सत्कवित्वेन पण्डित्यभावैस्तथा
वर्धतां विश्वतो वैभवं भारते।।६४।।

सत्य व्यवहार से, सौम्य स्वभाव से, तप के आचरण से, संतोष से, सेवा एवं परिश्रम से तथा अपने स्वच्छ चरित्र से, अच्छे विचारों से, सत्कवित्व से और प्रकर्ष पाण्डित्य के भावों से विविध प्रकार के विचारों से पूजित इस भारत वर्ष में वैभवों (सम्पदाओं) को बढ़ावें, जिससे यह राष्ट्र पुनः विश्वगुरुत्व को प्राप्त कर सके।।६४।।

भोजनं ब्रह्मचर्यं च निद्रा भयं
मैथुनं शास्त्ररीत्यैव निर्धार्यताम्।
जीवनोद्देश्यमत्राऽस्ति धर्मप्रियं
भारतीयप्रकारेण सञ्जीव्यताम्।।६५।।

भोजन, ब्रह्मचर्य, निद्रा, भय, मैथुन- इन सबका निर्धारण (सुनिश्चय) शास्त्ररीति से ही करें, क्योंकि धर्मप्रिय होना ही यहाँ जीवन का उद्देश्य है। अतः पूर्वज महर्षियों द्वारा अनुभूत एवं निर्दिष्ट प्राचीन भारतीयपद्धति से ही जीवन व्यतीत करें।।६५।।

सङ्गतिः सज्जनानां सदाश्रीयतां
दुर्जनासङ्गतिर्दूरतो हीयताम्।
धर्ममार्गेण नक्तन्दिवं चल्यतां
मस्तकं भारतस्यात्मनो भूष्यताम्।।६६।।

भारत वर्ष में रहने वाले लोग सदा सज्जनों की संगति करें, दुर्जनों की संगति का परित्याग करें और रात-दिन हमेशा धर्म के मार्ग पर ही चलें तथा अपने भारत के मस्तक को अलंकृत करें।।६६।।

